मत्सुताराज्यानि (१)स्वविघ्नान्यत ऊर्वीमित्यवदत् ॥२३॥
अपरे पथि निजपत्न्यां मद्यं विमातिर्मातिर्या दत्त्वा ।
दुग्धाभाग्यमपरार्णान्मामित्थेनन्मदीपट्टलमिति ॥२४॥
अनुरे स्वर्गं याते ज्येष्ठे स्याले च कालगतियामे ।
तत्सुतानि पञ्चसमं नृपति कृत्वा व्यवर्धयं यमात् ॥२५॥
र्गास्मन्नारण्यमिते, पिशुनाः केचित् समप्रुवन राजन ।
गाचिवोऽयं कान्तिमतीं सह स्वगारं समय सम्पृहात् ॥२६॥
कृत्वा विषमयोगं दृष्टो ज्येष्ठं सहोदरं तेऽहन ।
त्वामपि हन्ता नूनं तस्मात् जयमूमुपायपोतनया ॥२७॥
इति चाटुवचनपटुभिर्नित्यं गदितोऽपि मन्त्रिणोऽपक्रान्तिम् ।
राजा न श्रीदर्शामप्याचरितुं यत्निर्णभयादशकत् ॥२८॥
अथ जातु दुःस्वप्नयुक्तां कान्तिमतीं वीक्ष्य राजपत्न्यवदत् ।
किं दुःस्वकारणं ते सदामर्षात् कामपालपत्नी ताम् ॥२९॥
जानास्येव सर्वां मम नाम्ना तारावली सपत्नी मे ।
नायकताडयन्मे भर्तॄशान्ते मदीययाभिधया ॥३०॥

---

(१) स्वविघ्नानि = स्वद्धीनानि ।

इत्यादि मालवानां नृपतिस्तनयाय दर्शयामास ॥५६॥
कान्तिमतीदृष्टान्तान्निभृतं चित्तगलिताः कन्याः ।
स्मारयितुमुचितं न यतन्तेऽत्रः मयालनीयैषा ॥५७॥
अस्यैव भूमिमदनं सर्वैरपि योगसाधनैः पूर्णम् ।
ज्ञात्वेति भावनार्थं कृतमयमेवात्र त्वयैवेति ॥५८॥
नियमन्नीनामिह सा द्वादश वर्षाणि कन्यका येन ।
मान्यपदमिता भूपो नाद्यापि स्मरति किं विधानमन्यम् ॥५९॥
गर्भस्थिता किलेयं माता वत्स प्रतिन्सिता तुभ्यम् ।
भवति भवानिदानीं चिन्तयितुं यत्र भगद्योग्यं तत् ॥६०॥
नामवटं राजकुले किञ्चित्कार्यं महत् मयाप्याहम् ।
अथैव भवितव्यो नूनं समयोचितं कारिष्य इति ॥६१॥
इत्यादर्शितमार्गो धामगृहं प्राप्य निर्भयं सुतम् ।
जीवग्राहमगृह्णात् गजानां सिंहपोतनाभानम् ॥६२॥
अरण्यानुग इव सर्पं धृत्वा नीत्वा विचेष्टमानं तम् ।
तेनैव पथा श्रीजनपुरतः पितृगर्विशो च तमनैषम् ॥६३॥
इष्टतमां मन्त्रितमां दुष्टं बन्धने नियम्यैनम् ।
कन्यां च तां यथाविधि कुवलयनयनां मया व्यवाहयताम् ॥६४॥

## अथ पञ्चमोच्छ्वासः।

मोऽस्वादीदेव ! महीमटंस्त्वदर्थं महीरुहस्याधः ।
सूर्येऽस्तमिते प्राप्तः शिलाधिपमाणोऽप्रवं विभावर्याम्॥ १ ॥

'क्रव्यादयमभ्ररणैर्भापिए एतद्वने मसुप्तस्य ।
सैवास्तु देवता मे शरणं यास्मिंस्तरौ निवसतीति ॥ २ ॥

यावन्निद्रामापं तावदनागरमतीवसुखदेन ।
स्पर्शेनाद्रातं निजपार्श्वे शयितां च कामिनीं काञ्चित्॥ ३ ॥

साऽरण्यानी क्व गता कुत इदमागतमहो महाहर्म्यम् ।
केयं तरुणी रतिमप्यतिशेते या स्वरूपसम्पत्त्या ॥ ४ ॥

आश्लिष्येत मया यदि भीता निद्रापसंशयं जयात् ।
शयितुं न पारये स्मरशरलक्ष्यीकृत इमामनालिङ्ग्य ॥ ५ ॥

यद्वापि भवतु तदमूं कुर्यामीति विचार्य हृदये ताम् ।
स्पृष्टास्पृष्टं ममदां परिरभ्याऽशयिषि सुप्त इव भूत्वा ॥ ६ ॥

सा सद्यः स्मरबाधां कम्पस्वेदादिसूचितां प्राप्य ।
समपृहयीक्षित्वा मां सुदूरशायिष्टान्तिके न दूरे च ॥ ७ ॥

---

(१) क्रव्यादो = राक्षसः। 'क्रव्यादोऽस्रप आशरः' इत्यमरः।

प्रियपतिमभ्येमीति च यावत् प्रस्थातुमुद्यता तावत् ।
त्वमदृश्यथाः प्रसुप्तो न परिज्ञातो मया तु विपद्वदा ॥१६॥
शरणार्थिनममुमविरलभयेऽजनेऽस्मिन् वने परित्यज्य ।
गन्तुमयोग्यमिति प्रिया त्वामनयं निद्रया पराभूतम् ॥१७॥
किन्तु यदा शिवमन्दिरनिकटगमनं मानसे सदाकार्षम् ।
पूनाऽनेन सह कथं मद्वपुर्वर्तुं त्वया प्रवेयमिति ॥१८॥
नवमालिकाभिधानां श्रावस्तीनाथदुहितरं सजनाम् ।
हर्म्यतले घर्मसमयसुभगे सुप्तां विलोक्य तत्सविधे ॥१९॥
शेतां विमुक्तोऽयं कृतकृत्या यावदागमिष्यामि ।
इति तत्र शाययित्वा त्वामहमगमं शिवालयं तूर्णम् ॥२०॥
गिरिजाऽप्योचद् भद्रे ! त्यज चिन्तामवसितोऽद्य शापस्ते ।
पत्या सहास्य सुखं निर्विश सुचिरं मयाहि सपदीति ॥२१॥
निजमहिमानमधिगता देवीकृपया त्वमस्यभिज्ञानः ।
ननु तनुज एव मे त्वं यदसि सुहृत् प्रियतमोऽर्थपालस्य ॥२२॥
मोहाक्षिप्तया त्वय्यपि विरकारीति सानुशयमेतद् ।
मनो मां दहतितरां वत्स ! सहस्वापराधमेनं मे ॥२३॥
निद्राभिभूतं शयितौ परन्त्वनिद्रौ परस्परासक्तौ ।

रणदन्तरतूर्यनिरुद्धार्थोमन्थरभावपौरवम् ।
दिश्चिद् भारतमनया मार्गो याहं त्वमत्र मदनीये ॥२२॥
रामार्तमनुपनारीरपचरितं मां विविक्त आसीनम् ।
गाम्भूप्रार्तवक्त्रा किं त्वयात्तं किमपि रहस्यमेलाम् ॥२३॥
तस्याः प्रश्नं श्रुत्वा यौत्स्य च चिरं स्वभावयं मनसि ।
एतदभ्यंतलं मन्त्रविमानं यत्र मे प्रिया दृष्टा ॥२४॥
एषापि तत्सर्वीनामन्यतमा नत्र या मयादर्शि ।
नतिकृतिरप्येषा मे तन्वन्वेऽप्रमिव कामविद्धेषा ॥२५॥
आदाय चित्रफलकं तस्मिन्नालिख्य राजतनयायाः ।
प्रतिकृतिमवदं गुप्तावेकर्णी प्रलोकितं स्वप्ने ॥२६॥
प्रतिकृतिया नयाहं पृष्टः सर्वं स्ववृत्तमाचक्षि ।
नाप्याख्यासा बाधा या नृपकन्या मदर्थमनुभवति ॥२७॥
यावच्च कतिचिद्दिनानि त्वयि रसज्ञो भवेदथ युक्त्या ।
सञ्चिन्त्य मां वदान्तिकमेमीति मैपयं वचस्तस्यै ॥२८॥
इदविदं गत्वास्या आलापापारोपतः समाचारम् ।
त्वगदं वनितावेषं धृत्वा त्वामनुसरामि राजकुलम् ॥२९॥

शयानः सितवसने सन्निहितः स्कन्दमन्दिरे तिष्ठेः ॥४८॥
एतावन्तं समयं तन्वङ्ग्या सह सौख्यमनुभूय ।
प्राप्स्याम्यनया साकं महोत्सवे सुरनदीजले स्नातुम् ॥४९॥
वारिविहारव्यापृतचित्ते कन्याजने सरित्सलिले ।
मग्नोपसृतश्चपलं तत्रोन्मङ्क्ष्यामि यत्र तिष्ठेस्त्वम् ॥५०॥
त्वदुपहृतं शुभ्रपटं वसान उत्सार्य '(१)दारिकावेषम् ।
भूत्वा ते जामाता नाम त्वामनुसरेयमह्नाय'(२) ॥५१॥
सा राजनन्दिनी मामन्विष्याऽप्राप्य तां विना नाहम् ।
भोक्ष्य इति व्यथिता स्यात्तस्मात्कोलाहलो महान्भावी ॥५२॥
तस्मिन्समये मयानुयातो गत्वा सभां नृपं ब्रूहि ।
एष स मे जामाता सकलकलाकोविदः श्रुतिषु निष्णातः ॥५३॥
आन्वीक्षिकीविचक्षण इषुप्रयोगे तथा गदायुद्धे ।
असमानो '(३)हस्त्यश्वस्यन्दनतन्त्राणि वेत्ति पूर्णतया ॥५४॥
रतिवल्लभमतिशेते रूपे विगतस्मयश्च तदमुष्मै ।

(१) दारिका = कन्यका ।
(२) अह्नाय = झटिति । 'द्राग् झटित्यञ्जसाह्नाय' इत्यमरः ।
(३) हस्त्यश्वेति । गजाश्वरथशास्त्राणीत्यर्थः ।

पृथिवीपतिना कथन ¹राजन्वान् जनपदः सुजनबहुलः ॥१६॥
आमवदमनन्तैरपायानन्ता यदुरम्यदेशपूर्णा च ।
न्वयधिनलक्षणपूर्णो नैकोऽपि परन्तु नीहृदस्त्यस्याम् ॥१७॥
किन्तु परं न युवयोरवयिनिर्मलपुत्रसूपायः ।
सुर्यामस्यां यदि वां मज्जान्वदर्शी भवेयमहमेव ॥१८॥
मयि भाषमाण इत्थं नपुररणितानि कर्णपथमायन ।
अवदत्ससम्भ्रमं मन्त्रिवरो नृपसुतैयमायाता ॥१९॥
अनिषिद्धदर्शनैषाऽस्मिन् कन्दुकमहोत्सवे तस्मात् ।
आयातं वीक्ष्यैनां सफले स्यातां विलोचने युवयोः ॥२०॥
तामन्वेव नृपसुता दृष्टा शशिशदकालहीनं यं ।
हृदयं नृत्यत्स्वसिते मामनुरागेण वीक्ष्य सा निरगात् ॥२१॥
स्मरनरविषमशरज्वरविदलहृदयोऽगमं गृहं सुहृदः ।
तेनानुभाविनश्च प्रयत्नयुक्तेन भोजनादीनि ॥२२॥
कठेरम चन्द्रसेना दिनावसाने समेत्य मां नत्वा ।
पर्यन्तिश्च आस्त मुदा तदौष्ण्या निशां समापद्य ॥२३॥

---

(१) 'सुराज्ञि देशे राजन्वान्' इत्यमरः ।

यदि देवमतं कन्यां परिणययोग्यां मदात्मका
इत्याकर्ण्य वचस्ते निरुपायो भूपतिः सचिवः
अनुनेतुं प्रयतेत त्वां जगतोऽनित्यतादिकः
त्वमदत्तश्रवणस्तद्वचसि क्रन्दन् प्रवेष्टुकामः
काष्ठैरेधितमग्निं निःशङ्कं राजमन्दिरद्वारं
भूमिपतिर्धनविसरैस्तोषयिता त्वां स्वकन्यकां मह्यं
दत्वा मद्गुणतुष्टो युवराजपदं च मे समर्पयिता
इति कार्य उपायोऽसावपि ते रोचत इति ब्रुवन्तं माम्
आश्वास्य यथोक्तमयं कौशल्यात् सर्वमप्यसाधयत ॥
सिद्धमनोरथ एवं कृत्वा चम्पेश्वरस्य साहाय्यम् ।
मित्रमिलनसङ्केतस्थानं जिगमिषुरिहागमं राजन् ! ॥६
अत्र प्रभो ! सुदैवात्तवदर्शनलाभमप्यवापमहम् ।
अप्रतिकूले दैवे कार्यं सिद्ध्यदसाध्यमपि नूनम् ॥६१॥
श्रुतद्वचो नृपतिसुतो प्रमतिं समेभिः सुसद्वचनैः ।
स्तुत्वाह मित्रगुप्तं स्वोदन्तं त्वमपि मित्र ! कथयेति ॥६२॥

इति प्रमतिचरितं नाम पञ्चम उच्छ्वासः ।

आराधयिष्यति सुता राज्ञस्तस्मान्महो महानद्य ॥८॥
अनुरक्तावन्योन्यं नृपदुहितुः सख्यहं च सातिशयम्।
किन्तु हठाद्रवनिपतेः साऽङ्गभुवा भीमधन्वना रुद्धा ॥९॥
उत्कंठितमनस्तर्थ कामशरैर्जर्जरीकृतोऽत्राहम्।
[1]परिवादिनीप्रवादनविरतचेतः करोमि सन्तुष्टम् ॥१०॥
अत्रान्तरे आयार्सीत्काचित्तरुणी स तां समाश्लिष्य।
मामाह कोषदासः सैषा मे प्राणवल्लभा मित्र! ॥११॥
मत्प्रियतमां निरुन्धन्मेऽमूत्रिष्कामयत्यसौ दुष्टः।
नृपसुत इत्याचरितुं पापं नास्मिन्नहं समर्थोऽस्मि ॥१२॥
सोऽहं निरुपायोऽद्य मे श्येनां जीवितेश्वरीं हर्म्याम्।
पर्याप्तममोघान्प्राणान् हास्याम्यतीव मुदितमनाः ॥१३॥
इति वादिनि सा तस्मिन्नवदन्मा मा कुरुष्व नाथेदम्।
साहसकृत्यं मत्कृत इति बाष्पाकुलविलोचना तरुणी ॥१४॥
भूयाश्चावोचन्नय वल्लभ! मामद्य यत्र गन्तुमनाः।
सर्वानपि बन्धुजनांस्त्यक्त्वा त्वामनुसरामि निःशङ्कम् ॥१५॥
एतत् श्रुत्वाऽपृच्छत्स मां महाभाग! किं त्वया दृष्टः।

---

(1) शततन्त्रीघटिता वीणा परिवादिनीत्युच्यते।

दृष्यन्तं स्वस्थाने बलवत्पुरुषैरबन्धयन्निगडैः ॥३२॥
तत्रैव चाऽमाणीत् मूढमते ! स्पशमुखान्मयावगतम् ।
यत् चन्द्रसेनयोक्तं सद्मनि दुष्टस्य कोशदासस्य ॥३३॥
पार्श्वस्थमनुचरं च मं ह्यावोचत् क्षिपैनमाश्वब्धौ ।
मामनुपत्य इवासौ तुष्टो लघु मां न्यमज्जयत् जलधौ ॥३४॥
दैवात् मासं किञ्चित् काष्ठं वक्षःस्थलेन परिरभ्य ।
सत्रमानेन परेद्युरुषसि मया नौर्व्यलोकि यवनानाम् ॥३५॥
नायकसविधे नीत्वा मद्वृत्तं मां तं च नाविका अवदन् ।
दासासेचनपटुतमकायः कोऽप्येष ना जले लब्धः ॥३६॥
नौकासमुदायोऽस्मिन्काले यवनाधिपस्य तां नावम् ।
पर्यरुणोत्कोऽपि तदारब्धे समरे पराजयत यवनान् ॥३७॥
ते चाबिभयुः सर्वे तानहमगदं प्रगल्भवचनेन ।
मोचयत बन्धनान्मामेनान् शत्रून् विजेष्येऽहम् ॥३८॥
ते तद्कार्षुः स्वरशरनिकरैर्जित्वा रिपूनवप्लुत्य ।
जीवन्नमग्रहीषं तन्नेतारं मणष्टसकलबलम् ॥३९॥
लज्जाननाननमग्रं वीक्ष्याभिज्ञाय भीमधन्वानम् ।
मावोचं दृष्टाः किं विधेर्विलासा अतीव दुर्वाराः ॥४०॥

व्याहार्षीन्मन्मित्रं तां मेयसि ! यावदायुरहमेवम् ।
यदि तव कृपास्पदं स्यां नूनं मन्ये तदातिधन्यः स्याम् ॥२४॥
अहमवदं मित्राञ्जनमस्त्येकं ते प्रियां तदक्तदशाम् ।
मन्त्रेण वानरीमिव खलो विरक्तस्त्यजेदिमां चाशु ॥२५॥
स्मेराननागदत्सा धन्यास्म्यहमार्य ! यद्भवान् मह्यम् ।
अरिमस्येव सुमानुषजन्मनि शाखामृगीं तनूं दिशति ॥२६॥
अलमलमनया युक्त्या समीहितं नोऽन्यथापि सिद्धमिव ।
यत उन्मदे नृपसुता त्वां वीक्ष्य स्मरविकारपात्रमभूत् ॥२७॥
वेदितवृत्तो राजाऽवश्यं दास्यति निजां सुतां तुभ्यम् ।
दैवीरससामर्थ्यात्तत्पुत्रः स्याद्ध्रुवं त्वदनुजीवी ॥२८॥
त्वदधीने राज्येऽस्यामाराममुपस्त्य ते निरोद्धुं माम् ।
नैवालं भविता मत् शान्त्या सहतां दिनानि कतिचिदपम् ॥२९॥
इत्युक्त्वा निरगात्साऽहमपि कथमप्यपापपाय निशाम् ।
अपरेऽह्न्युद्यानं तदयां यस्मिन् प्रिया मयालोकि ॥३०॥
मातृगृहस्य नृपसुतस्तत्र कथाभिः शुभाभिरनुगुण ।
हासाद्वं नर्म्यालापैः पानैर्वीणारवस्तृणनिर्यार्यैः ॥३१॥
अन्यगतं मां स्वप्ने निशागमारोऽपगीप्यनिर्विशात् ।

अहमपि वीतभयस्त्वं समभ्यधां सौम्य ! संशृणुष्वेदम् ॥४८॥
सौहृदयं दारगुणाः सङ्कल्पश्चेति ते नियोगानाम् ।
श्रीण्युत्तराणि चरमं प्रश्नं चेति क्रमाद्विजानीहि ॥४९॥
धूमिन्या गोमिन्या निम्बवतीति प्रसिद्धिमाप्तायाः ।
तद्वनितम्बवत्याः कथोत्तराणां प्रमाणमेतेषाम् ॥५०॥
कीदृश्यसौ कथा तां श्रुत्वा त्वामुत्सृजामि याहि सुखम् ।
इत्याहेति तेन भणितो धूमिन्या वक्तुमारभे वृत्तम् ॥५१॥
अस्ति त्रिगर्तनामा नीवृत्तस्मिंस्त्रयोऽवसन् गृहिणः ।
ज्येष्ठो धनको धान्यक इत्यपरो धन्यकः कनिष्ठश्च ॥५२॥
जनपद आसीदस्मिन् द्वादशवार्षिण्यवग्रहो[1] जातु ।
दुर्भिक्षं च महद्भूद् भीमं प्राणिप्रमाथकृत् तस्मात् ॥५३॥
एते गृहिणो धान्यं तदभावे चाजगोगवलनिवहान् ।
दासीदासानग्रजभार्यं चैतत् समस्तमप्यादुः[2] ॥५४॥
अन्याद्यन्यप्रस्यात्यन्ताभावात्कनिष्ठबन्धुवधूम् ।
निश्चित्य वपुर्भक्षयितुं धूमिन्याख्यां तदा पतिस्तस्याः ॥५५॥

---

(१) अवग्रहो = वृष्टिप्रतिबन्धः ।

(२) आदुः = अभक्षयन् ।

'सांयात्रिकास्तु ते तं दुष्टं बद्ध्वा मदीयनिगडेन ।
व्यहसन्नुच्चैः किलकिलशब्दैर्मां चाद्रियन्त सन्तुष्टाः ॥४१॥
प्रतिकूलसमीरणरयनिघ्ना तरणिर्विहाय वर्त्मेष्टम् ।
दूरमतीत्य द्वीपं विपिनसरिच्छैलवन्तमाश्लिष्यत् ॥४२॥
परिणतफलनततरुभिर्नानावर्णैः सुमव्रततिवलयैः ।
शुकसन्निभहरिततृणैः कलविरुतैः पत्त्रिभिश्च संयुक्तम् ॥४३॥
भूभागं स्यादृमलाः सरितश्चालोकयन् सरश्चैकम् ।
मणिकृतसोपानपथं कमलैः पूर्णं समभ्यगां रम्यम् ॥४४॥

स्नातो यावत्स्वादून्यादं कतिचित् फलानि विगतभीः ।
सहितानि तावदतिभयजनको मां ब्रह्मराक्षसोऽभ्यादीत् ॥४५॥
कस्त्वं कुत आगा इह तस्मै सर्वं स्ववृत्तमाचक्षि ।
सोऽब्रूत प्रश्नान्मे नोत्तरयेश्चेन्निहन्मि नूनं त्वाम् ॥४६॥
किं क्रूरमिति प्रथमः किं गृहिणः प्रियहिताय चेत्यन्यः ।
कः काम इति तृतीयः किं दुष्करसाधनं जगत्यस्मिन् ॥४७॥
इति च तुरीयः प्रश्नो ममेति गदतो प्रतर्पयसि न माम् ।

(१) सांयात्रिकाः = पोतवणिजः ।

अमुनैव दुष्टमतिना भर्त्रा मे प्रापितो दशामेताम् ॥६३॥
इति कुलटया निवेदित इलेश एनं समादिशद्धन्तुम् ।
स जगाद वधस्थाने यस्येयं दुर्दशा मया विहिता ॥६४॥
इति मन्यते स दोषं यदि मे प्रत्याययेत्तदा हन माम् ।
तदनु स साधुरसत्या दुष्कर्माऽस्य च सुकृत्यमाचष्ट ॥६५॥
भूपतिरदण्डयत्तां चकार चास्याः पतिं कृपापात्रम् ।
स्त्रीहृदयं क्रूरमिति प्रतीम्यतोऽहं शृणु द्वितीयमपि ॥६६॥
इत्युक्त्वा प्रावर्त्त गदितुं तद् ब्रह्मराक्षसायेत्थम् ।
द्रविडजनपदे काञ्च्यां नाम नगर्यां प्रभूतधनयुक्तः ॥६७॥
श्रेष्ठिकुमारो नाम्ना शक्तिकुमारोऽवसत् पुराकल्पे ।
स प्राप्तस्तारुण्यं मनसि कदाचिद्विचारयामास ॥६८॥
सुखिनो न ते विहीना ये दारैर्ये च सन्त्यगुणदाराः ।
तस्मात्स्वयं परीक्ष्य प्रयत्नतो दारसंग्रहं कुर्वे ॥६९॥
इति निश्चित्य पटान्ते बद्ध्वाऽसौ प्रस्थपरिमिताः [1] शालीः ।
दैवज्ञोऽहमिति वदन् विचचारोर्वीमितस्ततः श्रेष्ठी ॥७०॥

---

(१) शालीः तण्डुलान् धान्येति ।

भगिनीमिव तामपि सा समुपचरन्ती ततान परितोषम् ॥७८॥

तस्माद् भवन्ति गृहिणो दारगुणाः विपरीताय निःशङ्कम् ।
निम्बवतीवृत्तान्तं मम इदानीं शृणुष्व वक्त्राणात् ॥७९॥

सौराष्ट्रेषु वलभ्यां हरदत्ताख्यो वणिक् कुबेरसमः ।
न्यवसत् तस्य सुताऽभूत् रत्नवती नाम रूपगुणयुक्ता ॥८०॥

तां मधुमत्याः कश्चित् बलभद्रो नाम सार्थवाहसुतः ।
उपयेमे किन्तु रहो रभसाद् विप्रवरतस्तुकोपार्श्वे ॥८१॥

स्वनुनीतोऽपि सुहृद्भिर्बन्धुजनैरपि तथैव तां सोऽद्वेट् ।
तस्मान्निम्बवतीयं नहि रत्नवतीत्यवादि पुरलोकैः ॥८२॥

आत्मानं शोचन्ती जातु परिव्राजिकां समायाताम् ।
दृष्ट्वाऽकथयत् स्वं सर्वं चास्याः पुरो रुरोद भृशम् ॥८३॥

दयमाना सावादीद् वत्से ! ननु दैवजन्यमसुखमिदम् ।
अस्य न भविता भोगाद् विना विनाशस्तनूवर तपस्त्वम्॥८४

अथवा स्यात् चेत् काचिद् युक्तिस्तां वद मतिर्हि ते पट्वी ।
तत् श्रुत्वा सा न्यगदद् ध्यात्वा निःश्वस्य दीर्घमुष्णं च ८५

पतिरेव दैवतं किल मातः ! स्त्रीणामतो मया भर्तुः ।
सेवा येन चिरं स्यात् स कोऽप्युपायो ध्रुवं विधातव्यः ॥८६॥

यां कांचित् स सवर्णामैक्षत कन्यामुवाच तां भद्रे !
वद शक्नोषि किमाभिः सम्पन्नं मां त्वमन्नमादयितुम्[1] ॥७१॥
सर्वत्र विहसितोऽसौ तिरस्कृतश्च भ्रमन् जगाम शिवीन्।
कावेरीतीरस्थितपत्तने एकां व्यलोकयत्कन्याम् ॥७२॥
सर्वाङ्गसुन्दरीं तां सकलैर्गृहिणीगुणैश्च समवेताम्।
दृष्ट्वा प्रश्नमकार्षीत् मेमेव शालीस्तथेत्यगृह्णीत् सा ॥७३॥
कृत्वा ता वीततुषास्तुषांश्च विक्रीय काकिणीर्लब्ध्वा।
स्थालीमेधांसि तथा शरावयुगलं च ताभिरक्रीणात् ॥७४॥
स्थाल्यामोदनमपचत् तन्मण्डमगालयत् शरावेऽसौ।
अभ्युक्ष्याग्निं चाद्भिः कृष्णाङ्गारानदात् तदर्थिभ्यः ॥७५॥
तल्लब्धकाकिणीभिः शाकं तैलं तथैव दधि सर्पिः।
लवणं चेति समस्तं क्रीत्वा चक्रे शुभोजनं सिद्धम् ॥७६॥
धात्रीद्वाराऽयाचत तं स्नातुं स तु समापितस्नानः।
भुक्त्वा तदन्नमतितरतुष्टो विधिवद् विवाह्य तामनयत् ॥७७॥
तन्निरपेक्षो भूत्वा कैश्चिद् दिवसैः स वेश्ययाऽरंसीत्।

---

(१) आदयितुं = भोजयितुम्।

निम्बवर्तीभर्ता मामवदद् जिगमिषुरिमां पुरीं त्यक्त्वा ॥९४॥

निष्कारणमुद्गृह्यत मया प्रिया मे तथैव बन्धुजनाः ।
सुहृद्भावमनास्थाय पारयेऽहं हि यात्र वस्तुमिति ॥९५॥

तस्मै विनयः एष प्रायस्तेनैव सापनीतेति ।
श्रुत्वेदं बन्धुजनास्तद्विषयेऽनादरं तदा व्यदधुः ॥९६॥

खेटकपुरमासाद्य व्यवहारी भार्यया समं तस्मिन् ।
स्वकुशलतयार्जयित्वा विपुलं द्रविणं सुखेन वसति स्म ॥९७॥

तद्भार्याया दासी जातु प्रमादादात्मकर्तव्यात् ।
तस्मात् च यदादण्ड्यत तदा क्रुधा निर्बिभेद तद्गुह्यम् ॥९८॥

लुब्धो दण्डाधिकृतस्तमवोचत् पौरवृद्धजनपुरतः ।
निधिपतिदत्तसुतां त्वं चौर्येणानीय वससि नगरेऽस्मिन् ॥९९॥

तस्मात् सर्वस्वं ते हृत्वा निष्कासयामि पुरतस्त्वाम् ।
इति तद्वचनं श्रुत्वासावभ्यपतिरगमाद्भ्रोऽन्यत्नम् ॥१००॥

तद्भार्या तमवादीत् मा भैषीर्दण्डनायकस्य पुरः ।
प्रिय ! गत्वाऽशङ्कं वद नेयं सापि तु ममैव पत्न्येषा ॥१०१॥

यदि न प्रतीथ दूतं प्रेषयतास्याः पितुः समीपमिति ।
बलभद्रोऽपि तदन्तिकमित्वा तस्मायवोचदखिलमपि ॥१०२॥

अस्मत्प्रतिवेशिसुता कनकवती नाम मत्समाकारा ।
सख्यस्ति मे तया सह रंस्ये गत्वा तदीयहर्म्यतलम् ॥८७॥
त्वं तु कथंचन मत्पतिमानय तस्या गृहं स्वचातुर्यात् ।
अन्तिकमायातेऽस्मिन् क्षिपाम्यहं कुसुमकन्दुकं तस्याः॥८८॥
आदाय कन्दुकममुं ब्रूया वत्स ! त्वदीयदाराणाम् ।
एषा सखी प्रियतमा कनकवती नाम चारुसर्वाङ्गी ॥८९॥
त्वामतिनिर्दय इति सा निन्दत्यनिशं भृशं सखीहेतोः ।
विनिवर्तयस्व ,तदिमं द्विपदनं कलहहेतुमूलं हि ॥९०॥
इति बोधितो यदोर्ध्वं पश्येन्मह्यं च कन्दुकं दद्यात् ।
तामेव मन्यमानो मां मयि भावं दृढं हि बध्नीयात् ॥९१॥
तदनु विधेहि तथा त्वं यथा स यायान्मयानुयात इतः ।
परदेशमिति तयोक्ते सा तत् कर्तुं सहर्षमङ्ग्यकरोत् ॥९२॥
श्रमणामयुक्तयुक्त्या निजभार्यां वणिगमंस्त कनकवतीम् ।
वगुभूषणयुतया स भावसदनया सहैव निशि तमसि ॥९३॥
प्रथयाञ्चकार दृष्ट्वा नगरेऽन्यस्मिन् दिने [1]यथानुरागी ।

---

(1) अनुरागी = परपाणासुलः ।

तस्येयं प्रियललना लिखिता लावण्यविस्मितेन मया ॥१११॥
श्रुत्वैतत्तद्दीनः स्वैरोऽसौ कलाकृत्को गत्वा ।
उज्जयिनीनगरीं नामपश्यद्दद्दीप्यताम्य पान्थः ॥११२॥
लब्धश्मशानरक्षाव्यापारः पौरमुख्यजनतोऽयम् ।
समतोषयत् श्रमणिकां कांचित् 'तथास्त्रीणपवगार्थैः॥११३॥
मायतन वशीकर्तुं तद्द्वारा सुन्दरीं नितम्बवतीम् ।
बिल्वफलमत्र एतामेकान्ते चेत्यमादिदाह दूतीम् ॥११४॥
भूयस्तो गत्वा वद वत्से । त्वं किल परीक्षितासिमया ।
नितरां सन्तुष्टास्मि च तव चारित्र्येण किन्तु पुत्रयुताम्॥११५॥
इच्छामि त्वां द्रष्टुं पतिस्तु तेऽधिष्ठितः पिशाचेन ।
अनिरस्य विघ्नमेनं पुत्रस्तस्माद्भवेत्स ते नूनम् ॥११६॥
तस्मात्त्वमद्वितीया प्रविश्य सत्वाटिकां मयोद्योगात् ।
तत्रागतस्य कस्यचित् स्वपदं देहि मान्त्रिकस्य करे ॥११७॥
तन्मन्त्रितपादेन प्रहरसि यदि हृदि पतिं प्रणयकोपात् ।
स ग्रहबाधामुक्तस्तदा समः स्याद्ध्रुवं सुतोत्पत्त्यै ॥११८॥

(१) इत्यपैति । शावकसमादिरिति ।

तरणौ ज्वलग्मिनाया आकर्षन्ती व्यलोकयं मृतकम् ॥१२७॥
शवमभिदृष्टवाकार्षं शक्तिकृपा निहमृत्पृन्तेऽस्याः ।
तच्चरणान्मञ्जीरं पाश्चिद्दमविलम्बितं च साऽप्यारीत्॥१२८॥
सोऽयं भूपामासिमकार आर्या न चान्यथाम्येतत् ।
सा शाकिनीति सिद्धं विमर्शितोऽतो रिसर्जिता पत्या॥१२९॥
उद्बन्धनेन हातुं प्राणान् पितृवनमपात् तद्दासौ ।
सोऽस्या निपत्य पद्योस्तामनुनीय च निनाय निरुपायाम्१३०
दुष्करसाधनमस्मिन् लोके मन्त्रेऽत्यतोऽहमाचक्षे ।
स ब्रह्मराक्षस इदं श्रुत्वा वचनं प्रपादस्पकार्षीत् ॥१३१॥
अथान्तरे नभसो जललवयुक्तानि मौक्तिकान्यपतन् ।
केयमकाले वृष्टिर्मुक्तायुक्तेति विस्मितोऽभूवम् ॥१३२॥
मुखमुद्दनमयं यावत्तावदपश्यं निशाचरं घोरम् ।
तेन च काञ्चिन्मसभं ह्रियमाणां स्त्रीं विचेष्टमानाङ्गीम् ॥१३३॥
गगनगमनशक्तिरहित आयुधहीनश्च मनसि समनप्ये ।
मन्त्रागदनिहतबलः सर्प इव ब्रह्मराक्षसश्च तदा ॥१३४॥
रे दुष्ट! तिष्ठ तिष्ठ कापहरसि पाप! मुञ्च मुञ्चैनाम् ।
इत्युक्त्वोड्डीयास्मात्स्थानात्समसृज्यवनमतिवेगात् ॥१३५॥

नूनं साक्षीकर्ता तदन्वनुष्ठाय तन्मया मोक्तम् ।
मातर्विधानमेनां मम पुर आनयसि चेत् प्रसादः स्यात्॥११९॥
सा स्वीकृत्य ययौ तत् हृष्टः सोपि प्रविष्ट आरामम् ।
तत्तरुणीमार्गार्पितनेत्रोऽत्यन्तं समुत्सुकोऽतिष्ठत् ॥१२०॥
प्रव्राजिकाप्रयत्नेनार्पितचरणात् सुवर्णमञ्जीरम् ।
तस्या आच्छिद्य किमपि तदुरुमूले विलिख्य निर्यातः॥१२१॥
दुर्वर्तनं स्वकीयं निन्दन्ती श्रमणिकामभिक्रुद्धा ।
क्षतवेदनया नितरां चास्वस्था सा जगाम निजसद्म॥१२२॥
विक्रेयोऽयं नूपुर इति ब्रुवन् कलहकण्टकोऽन्येद्युः ।
अभ्यर्णमनन्तकीर्तेरगाचतोऽभूत्स नैगमश्शकितः ॥१२३॥
मद्गृिण्यस्वनूपुरद्वयमिति च तदा समदिशत्स्वभार्यायै ।
ह्रीभययुक्ता सा तु मेऽप्येकं माहिणीदिमां वार्ताम् ॥१२४॥
यत्नक्तं विश्रमितुं द्रुमवाटीं नाथ ! मे प्रविष्टायाः ।
चरणादेकोऽभ्रश्यत् बहु व्यचीयत न लभ्यतेऽद्यापि॥१२५॥
अनयैव वार्तयासावनन्तकीर्तिस्तमभ्ययुनगाशु ।
धूर्तं वणिग्समाजे पृष्टोऽयं चैवमाह निःशङ्कम् ॥१२६॥
शृणुतार्या गतरात्रौ परेतभूमौ स्थितोऽर्धरात्रेऽहम् ।

मादादर्भिभियामपि महता दुःखेन चन्द्रसेना ताम् ॥१४४॥
भ्रातृप्याभाद्भ्यतेरभागच्छं मयो ! विलोक्य त्वाम् ।
आनन्दस्याभ्युपगमं सार्धं मित्रैरहो परां काष्ठाम् ॥१४५॥

श्रुत्वेदं चित्रं दैवगतिः पुष्कलं प्रसादेषु ।
पौरुषमित्युपवर्ण्य राजा मित्रं स मन्त्रगुप्ताख्यम् ॥१४६॥

इत्थं स राजवाहनदृष्टः प्रारभत वृत्तमात्मीयम् ।
दयिताकृतदशनक्षतविदलितोष्ठो निरोष्ठ्यवर्णयुतम् ॥१४७॥

इति मित्रगुप्तचरितं नाम षष्ठ उच्छ्वासः ।

गगनतलाभिपतन्तीं नभसां पाणी मया समग्रहाम् ।
भयसम्मीलितनयनां भयेपमानां तथैव गुरुतरांश ॥१३६॥

अवतार्य मृदुनि पुलिने शुभ्रे समवेदिपि प्रियां मे ऽत्रम् ।
द्वावपि निशाचरौ तौ जन्ये ऽन्योऽन्यं निहत्य मरणमितौ॥१३७॥

सा कन्दुकावती मां सम्यग् ज्ञात्वाऽवदन्प्रियाहं त्वाम् ।
वीक्ष्यानुरागयुक्ता त्वय्यायं पञ्चबाणशरवशनाम् ॥१३८॥

मद्भ्रात्रा जलराशौ त्वं मज्जित इति निशम्य मरणेच्छुः ।
अतिसन्धाय सखीजनयुक्तं परिजनमपायमुद्यानम् ॥१३९॥

अयमधमराक्षसो मां निगृह्य भोगेच्छया प्रयान् मार्गे ।
अत्रैवमवसितोऽभूत् दिष्टात् पतितास्म्यहं शये न इति॥१४०॥

अध्यारोहं नावं प्रियायुतः प्राप्तुम द्रुतं तीरम् ।
प्रतिकूलेतरवायोः साहाय्यार्दम दामलिप्तपुरम् ॥१४१॥

सुतयोर्नाशाद् मरणव्यवसितमाकर्ण्य जनमुखान्नृपतिम् ।
तस्मायखिलं वृत्तं कथयित्वा तौ समार्पयं तनुजौ ॥१४२॥

हृष्टो नृपः स्वपुत्र्याः पाणिमपीडयदसौ मया विधिवत् ।
देवीवरप्रभावात् तस्य च पुत्रो ममानुजीव्यभवत् ॥१४३॥

मदनुज्ञातः पार्थिवतनयो विनयेन कोशदासाय ।

## अथ सप्तमोच्छ्वासः ।

क्षोणीशेशतनुजने ! सहसा यातस्य ते गतिं ज्ञास्यन् ।
जातु कलिङ्गान् यातस्तत्र नगर्याश्च नातिदूरस्थे ॥ १ ॥

[1]संस्थितनिर्दहनस्थल इलारुहस्याध एककस्य निशि ।
किसलयशयने निद्रानिलीढनेत्रोऽशयिष्यतिश्रान्तः ॥ २ ॥

आज्ञां ददाति दुष्टः क्रीडाकाले हि सिद्धहतकोऽसौ ।
साधु स्यात् केनचन क्रियेत सिद्ध्यन्तराय एतस्य ॥ ३ ॥

इति किङ्करकिङ्कर्योरश्रूयत दुःखयुक्तयो रटितम् ।
हृदयेऽकार्षं च तदा कोऽयं सिद्धोऽस्य का च सिद्धिरिति ॥४॥

तद्दर्शनलालसयाऽऽकृष्टोऽगां किञ्चिदन्तरं च यदा ।
दृष्टः कश्चित् जटिलस्तिलसिद्धार्थादिकान् किरन्नग्नौ ॥ ५ ॥

तत्सन्निधौ निदेशाकर्णनसज्जश्च किङ्करः कश्चित् ।
तनया कलिङ्गराजस्यात्रानेयेति चादिशत्तं सः ॥ ६ ॥

तेन तथेत्यानीतां क्रन्दन्तीं तां निगृह्य केशेषु ।
क्रूरः खड्गेनासीदस्याः शीर्षस्य कर्तने सज्जः ॥ ७ ॥

---

(1) संस्थितेति । श्मशान इत्यर्थः ।

## अथाष्टमोच्छ्वासः ।

मित्रैरिव तव विचये कृतमतिना [1]काश्यपीतले भ्रमता ।
विन्ध्यवने देव ! मया कश्चिद् शिशुरष्टहायनो दृष्टः ॥ १ ॥
क्षुत्तृड्भ्यामतिखिन्नो मार्गश्रान्तः स मां समीरवदत् ।
दीनस्य चेद्द्विदध्याः साहाय्यं मे भवेन्महापुण्यम् ॥ २ ॥
द्रष्टुं तृषां मदीयां हृदो निष्कासयन्नपोऽपतत् ।
कूपे मर्मकरस्तत्क एतस्योत्तारणे क्षमो नाहम् ॥ ३ ॥
आकर्ण्य तत् तदन्तिकमुपेत्य जीर्णं कयापि दृढलतया ।
उद्धृत्य शिशुमकार्षं फलजलदानेन वीतखेदं तम् ॥ ४ ॥
वृक्षादध उपविष्टो वृद्धमवोचं क एष कथ त्वम् ।
कथमियमापन्नाऽऽपद् विस्तरशः ख्याहि सर्वमेवेति ॥ ५ ॥
साश्रुनयन आह जरन् भद्र ! विदर्भेषु पुण्यवर्माख्यः ।
लोकप्रियो गुणनिधिर्भोजान्वयभूषणं नृराजोऽभूत् ॥ ६ ॥
सुचिरं जीवित्वाऽस्मिन् निजसुकृतैः स्वर्गतेऽथ जनहृज्जिनैः ।
आसीदनन्तवर्मा तत्पुत्रस्तत् समृद्धिमद्राज्यम् ॥ ७ ॥

---

( १ ) 'क्षोणिर्ज्या काश्यपी क्षितिः' इत्यमरः ।

तन्निखिलनिर्जराणां क्रियतां चाराधना तथार्थिजनाः ।
सन्तोप्यन्तां दानैः कारायां निगडिताश्च सृज्यन्ताम् ॥४८॥
दयितासखीं,कदाचित् शशाङ्कसेनां निरीक्ष्य चाचष्टि ।
सा चानन्तेशसुतां ज्ञातोदन्तां क्षणादकृत राजन् ! ॥४९॥
नाथेन कलिङ्गानां दत्तां दयितां तथा कलिङ्गान्धान् ।
अङ्गीकृत्यात्रायां साहाय्यायाङ्गदेशराजस्य ॥५०॥
कृतकृत्य इदानीं ते जातः ससुहृद्गणस्य दर्शनतः ।
श्रुत्वैतत् सवयस्योऽभ्यनन्ददेनं नृपात्मजस्तुष्टः ॥५१॥
अधुना ख्यातु भवानित्यादिष्टो राजवाहनेन सुतः ।
सचिवस्य सुश्रुतस्य मारभताख्यातुमात्मनश्चरितम् ॥५२॥

इति मन्त्रगुप्तचरितं नाम सप्तम उच्छ्वासः ॥

नार्हसि निष्फलीकर्तुं मांऽस्मत्प्रार्थितस्य लाभार्थम् ॥१५॥
सेनाऽपि महागण्या कोशागाराणि चापि पूर्णानि ।
नानारत्नैरेषा राजसदनन्तु किमपि मे स्पृहम् ॥१६॥
किन्त्विदमपर्याप्तं यत् निरपतेऽप्यस्योपलब्धये यत्नः ।
ममविष्णोरिच्छा चेद् दासजनवचो विधीयतामेतत् ॥१७॥
यदिमां राज्यस्य धुरं विश्वसनीयेषु मन्त्रिषु न्यस्य ।
स्वशरीरमदः सफलय भुञ्जानो नित्यमेव सुखभोगान् ॥१८॥
असकृन्निर्बद्धोऽपि प्रधानसचिवेन तेन नृवरोऽसौ ।
आगोद्दचककर्णस्तदर्थनायां विहारभद्रोक्त्या ॥१९॥
वसुरक्षितः स्वमनसि व्यचारयत् पथ्यमप्यपथ्यमिव ।
द्वैप्योप मदुपदेशं यत् तद् भविता ध्रुवं महाऽनर्थः ॥२०॥
अस्यन्तकभूपालो वसन्तभानुः सुधीर्नयज्ञश्च ।
आयः स एव कुर्याद् रन्ध्रे सति राज्यमात्मसादेतद् ॥२१॥
अविनीतोऽपि न हेयः मत्सुरस्माद्राजनैर्विपत्काले ।
तन्महमानोऽत्रमतीरेन कृता स्वहं वसाम्यत्र ॥२२॥
इति सञ्चिन्त्य स्थितवति धीसचिवे राज्ञि चावदुर्वृत्ते ।
सञ्जातेऽस्मन्तकपतिमन्त्रिसुतश्चन्द्रपालितः कपटी ॥२३॥

सकलगुणाऽहीनं तं वीक्ष्यापि तु दण्डनीत्यनिष्णातम् ।
वसुरक्षितनामोचे मन्त्री योऽन्याहतोऽस्य जनकेन ॥ ८ ॥
बुद्धिर्हि दण्डनीतौ तेऽलब्धगतिर्न भाति तीक्ष्णापि ।
'ताताऽशाणोल्लीढो मणिरिव कनकं च नाग्नितप्तमिव ॥ ९ ॥
नयनयन एव नृपतिर्द्रष्टुमलं राज्यमार्गमतिविषमम् ।
तस्माद्विहाय विद्यास्वितरासु रतिं भवाऽऽद्दतो नीत्याम्॥१०॥
श्रुत्वा मन्त्रिवचोऽसौ यथोपदिष्टं करिष्य इत्युक्त्वा ।
शुद्धान्तमितो न्यगदत्स्त्रीणां पुरतः प्रसङ्गतश्चैतत् ॥११॥
कश्चिद्विहारभद्रो नामासीत्सूचकाग्रणीस्तत्र ।
परनिन्दानिपुणतमः स्मितपूर्वं सोऽगदन्निशम्यैतत् ॥१२॥
दैवाद्दृष्टवशादिह कोऽपि भवेद् भाजनं विभूतीनाम् ।
बहु बहु विलोभ्य तमिमे धूर्ताः स्वहितं प्रसाधयन्ति ननु॥१३॥
ऐहिकसुखोपभोगान् प्रतिबध्नद्भिस्तथैव निग्रत्वम् ।
विनरद्भिरमीभिरलं सम्प्रत्याकर्ण्यतामिदं वचनम् ॥१४॥
कमनीयं रूपमिदं तारुण्यं सम्पदः सुविपुलाश्च ।

(१) माशोनमाऽस्त्राऽश्कुणः ।

साहाय्यकोत्कटेच्छां प्रदर्श्य तस्याऽभवत्प्रियोऽत्यन्तम् ॥२२॥
माण्डलिकगणे निघ्नति निवेश्य सोमोद्भवातटे सैन्यम् ।
आहूय नर्तकीमतिरूपाढ्यां स्मानलोर्वशीं नाम ॥२३॥
कुन्तलपतेः प्रियतमामनन्तवर्मा व्यलोकयन्नृत्यम् ।
¹सौधाग्रभुक्तं चैनां प्रवर्तितश्चन्द्रपालितप्रमुखैः ॥२४॥
अत्रान्तरेऽश्मकेन्द्रः कुन्तलनाथं रहस्यगदद्वैरः ।
प्रोन्मत्तो भूमिपतिर्दारानपि नो हठात्परामृशति ॥२५॥
मर्षयितव्याऽवज्ञा कथमेषा तद्बलान्विताऽगताम् ।
सम्भूय भृत्यपङ्क्तिकामान् राज्ञो रहस्युपसर्पाव ॥२६॥
दुर्विनयेनास्योद्विग्नाः सर्वे ध्रुवं विहायैनम् ।
स्वीकुर्युर्नो पक्षं यत्प्राप्स्यामो विभज्य गृह्णीम ॥२७॥
व्यापार्य वानवास्यं मम चिरमित्रं नियोद्धुमेतेन ।
प्रहरिष्यामो दुष्टं पृष्ठत इत्थं मनोरथः सिद्ध्येत् ॥२८॥
अथ नयहीने विजिते विदर्भराजे वसन्तभानुरसान् ।
करदनरेशानवदत् विभजध्वं कोशवाहनाद्यस्य ॥२९॥

---

( १ ) सौधं — सदनम् ।

चारणसङ्घैर्नानाकलासु कुशलाभिरङ्गनाभिश्च ।
परिवृत एत्याऽमथयत् पित्रा निर्वासितोऽहमिति नगरे॥२४॥
अवनीपतिरारभत व्यसनं यत्तद्विधातुमुत्साद्य ।
छिद्रान्वेषी तस्मिंस्तस्यासक्तिं दृढीकरोति स्म ॥२५॥
प्रभुमनुरोद्धुं सर्वे सामन्ताः प्रकृतयश्च विविधानि ।
व्यसनान्याश्रितवन्तः सस्त्रीकास्तेन तत्प्रिया जाताः॥२६॥
अभ्यन्तरीकृतास्ते राज्ञा तुष्टेन पानगोष्ठीषु ।
स तदङ्गनासु तेऽपि च तत्कान्तास्वाचरन्दुराचारान् ॥२७॥
सामर्षाणामभवन् कलहास्तन्मूलकास्तदा बलिभिः ।
व्यजयन्त बलविहीना धनानि चाऽपाह्रियन्त दीनानाम्॥२८॥
हतबान्धवा अपहृताशेषधना बन्धयातभीत्रस्ता ।
अयथापराधदण्डाद्दिताश्च जना अकार्षुराक्रोशम् ॥२९॥
आक्रम्य राष्ट्रमखिलं तस्मानारूपधारिणोऽरिभटाः ।
व्यदधुर्विविधोपायैर्विदर्भराजस्य जर्जरं सैन्यम् ॥३०॥
अश्मन्तकनरपतिरथ वनप्रसुं भानुवर्मनामानम् ।
प्रोत्साद्य व्यग्राहयदनन्तवर्मप्रयुक्तसैन्येन ॥३१॥
सर्वेभ्यः करदेभ्यः मागेत्य स्वयमसौ विदर्भपतेः ।

यावन्निधनायागाममापं त्वयोद्धरस्वेति ॥४८॥
अधुनाऽशरणस्यास्य त्वमेव शरणं भवेति निजपाणी ।
स समानयसदारं समपृच्छं मातुरस्य का जातिः ॥४९॥
नातिदूरे भुक्त्वास्यास्तत्कथिते तं जरन्तमागच्छि ।
एवं चेत् मातामह एतस्यास्त्वाः पितुश्च मे नान्यः ॥५०॥
इत्थमिदं नाम च मम जनयितुराकर्ण्य सोऽभवत्तुष्टः ।
मन्यगामि च यद्यत्कर्तव्यं तद्विचार्य मनसाहम् ॥५१॥
मत्वाप्य राजपदतो वसन्तभानुं स्वलं नयेयेन ।
ध्रुवममुना बालेन स्वराज्यमचिरेण लम्भयेयमिति ॥५२॥
बालस्यास्य शुश्रूषां शमयेयं कथमिमामिति स्वान्ते ।
मयि चिन्तयति व्याधान्मुक्तौ हरिणौ स चापि तत्रायात्॥५३॥
आक्षिप्य मन्त्रिरातकरस्माद्बाणौ धनुश्च तौ हत्वा ।
शूलेनाशु विपच्य च ताभ्यां साकं तदामिषमभुङ्क्ष्व ॥५४॥
शून्ये तस्मिन्दृष्ट्वा पेशलतां मे सविस्मयं मृगयुः[1] ।
माहिष्मतीपत्तं सर्वमपृच्छत् तदा स आचष्ट ॥५५॥

---

(१) मृगयुः = व्याधः ।

मालां निजकन्यार्थं दद्यान्मर्ता खलो न सा कन्या ॥६३॥
राजनि मृते कुमार्यां जीवन्त्यां विभिन्नाः प्रजा गर्हीम्।
सम्मंस्यन्ते तस्याः पाणिमन्ये भर्तारमिमापसदाः ॥६४॥
भर्ता प्रचण्डवर्मण एषा देव्या तदा मदीयेन।
यद्राजहीनमेतद्राज्यं सुतया समं गृहाणेति ॥६५॥
कापालिकवेषधरावावां नगराद् बहिर्निवत्स्यावः।
आहूय पौरवृद्धानमात्यवृद्धांश्च सा वदेद् देवी ॥६६॥
यद् विन्ध्यवासिनी मां स्वप्नेऽवादीदितस्तुरीयेऽह्नि।
प्राप्स्यति मरणं दुष्टः प्रचण्डवर्मा मदीयसामर्थ्यात् ॥६७॥
मेखलकन्यारोधःस्थितमक्षिलयात्ततो द्वितीयदिने।
त्वत्तनयेन सहैको बाह्वत्तनुजो निरेष्यति भवतः ॥६८॥
राज्येऽस्मिन्ने बालं स्थापयिताऽसौ मया च तव पुत्रः।
निहितोऽस्ति प्रच्छाद्य प्रच्छायाम्भासुररूपयाऽऽहृत्य ॥६९॥
भूयोऽपि सा वदेत् तान यावदयं नापतेद् भविष्यार्थः।
तावद् भवत्सु तिष्ठतु गुप्तमिदं न प्रकाशयन्त्विति च ॥७०॥
जीनोऽसमयविहीनं मायान् स तदा समस्तमपि कार्यम्।
तदनुष्ठितं यथैव व्यचिन्तयं मासरव् च नगर इदम् ॥७१॥

सर्वे यथामयामं यथाबलं चांशभागिनः सन्तु ।
मम तु स एवांशः स्यायं यच्छेयुर्मुदा भवन्त इति ॥४०॥
इत्युपयुञ्जानेऽस्मिन्नुपधिं नृपतिषु कलिर्महानार्मान ।
अध्वंसयच्चदाऽसौ सर्वानहरत् च सर्वमपि तेषाम् ॥४१॥
किंचित् च जनमभये दत्त्वा सम्प्राप्य सर्वमपि राज्यम् ।
आत्माधीनमकार्षीत् विदर्भनृपवरस्य निर्गताशङ्कः ॥४२॥
वसुरक्षितो वर्तनं वृद्धामात्यो नृपात्मजं स्वधा ।
मात्रा च सहाऽपनयन् मार्गे दाहज्वरेण मृत्युमयात् ॥४३॥
मौलैर्नीता देवी ससुता माहिष्मतीपुरीमस्याः ।
भर्तुश्च द्वैमातुरममित्रवर्माणमाश्रयं वनितुम् ॥४४॥
सोऽकामयत दुरात्मा तां साध्वी सा च तं व्यमानयत
मत्ताऽग्रहणे बालः स्यादित्येनं स हन्तुमैच्छदपि ॥
तद् ज्ञात्वा राज्ञी मामवदत्त्वं शिशुममुं गृहीत्वा च ।
गच्छ क्वापि कोपमङ्गिमस्य च निवेदयेर्मह्यम् ॥४५॥
इति तस्यानुज्ञातोऽहं कष्टाद् बालं नृपात्मजं इमम् ।
निष्कास्य विन्ध्यकाननमविशमसार्थो च राजपुत्रभिया ॥४६॥
चरणचलनविरमोऽहं तीव्रपिपासाकुलश्च जात इति ।

प्राकारासन्नप्रासादमपानयं तद् महाग्रनिच्छद्म ॥७९॥
तद्वार्तां यालं संस्थाप्याहं कुशीलवो भूत्वा ।
नृपनेश्च सभां मायामनुरञ्जयितुं प्रचण्डवर्ममनः ॥८०॥
विविधा विधाय लीलाः माहार्षं वत्सस क्षुरिकयैनम् ।
जीव्याद् वसन्तभानुश्चिरमिति चानर्दमुघर्कनिनराम् ॥८१॥
दिनरोच्छ्रितमुत्प्लुत्य प्राकारं प्राप्य तूर्णमुद्यानम् ।
मन्पद्दलाञ्छिनसिकताः सुगमाः कर्तुं जरन्तमादित्तम् ॥८२॥
गत्वा निर्जनमठिकां धृत्वा कापालिकस्वरूपमहम् ।
निर्गत्य राजभवनात् पितृवनभूमिं सबालकः प्रायाम् ॥८३॥
अथ मध्यरात्रसमये राज्ञी चीनांशुकानि भूषाश्च ।
खचिता अनर्घरत्नैः प्रेषयदेतद्विभूषितावासाम् ॥८४॥
रैवातीरनिविष्टं प्रविश्य तद् शङ्करप्रियायतनम् ।
देवीप्रतिमाधस्तात् मागेव कृते विले न्यपीडाव ॥८५॥
अन्तर्नितान्ततुष्टा बहिस्तु दुःखं प्रदर्शयन्ती सा ।
॰ देवी वैश्वानरसात् प्रचण्डवर्माणम् ॥८६॥
चण्डवर्मणे नाम ।
कैतवेनेति ॥८७॥

प्राकारासन्नायामपनयं तद् महाव्रतिच्छद्म ॥७९॥
तद्रक्षार्थं बालं संस्थाप्याहं कुशीलवो भूत्वा।
नृपतेश्च सभां प्रायामनुरञ्जयितुं प्रचण्डवर्ममनः ॥८०॥
विविधा विधाय लीलाः प्रादर्पं वक्षसि छुरिकयैनम्।
जीव्याद् वसन्तभानुश्चिरमिति चानर्दमुग्रकैर्नितराम् ॥८१॥
द्विनरोच्छ्रितमुत्प्लुत्य प्राकारं प्राप्य तूर्णमुद्यानम्।
मत्पदलाञ्छितसिकताः सुसमाः कर्तुं जरन्तमादिक्षम् ॥८२॥
गत्वा निर्जनमठिकां धृत्वा कापालिकस्वरूपमहम्।
निर्गत्य राजभवनात् पितृवनभूमिं सबालकः प्रायाम् ॥८३॥
अथ मध्यरात्रसमये राज्ञी चीनांशुकानि भूषाश्च।
खचिता अनर्घरत्नैः प्रैषयदेतद्विभूषितावावाम् ॥८४॥
रेवातीरनिविष्टं प्रविश्य तत् शङ्करप्रियायतनम्।
देवीप्रतिमापश्चात् प्रागेव कृते बिले न्यषीदाव ॥८५॥
अन्तर्नितान्ततुष्टा बहिस्तु दुःखं प्रदर्शयन्ती सा।
विधिवद् विधाय देवी वैश्वानरसात् प्रचण्डवर्माणम् ॥८६॥
प्रमदिशदस्य भ्रात्रे दूतमुखात् चण्डवर्मणे नाम।
सञ्ज्ञानमखिलमेतद् वसन्तभानोर्हि चैतवेनेति ॥८७॥

पिता मत्तोन्मत्तनिमित्तं कुसुमानां स मालयाऽश्रितः ।
सह गेहे कन्यकाभिर् दशाभून्मण्डनं न चान्यता ॥७२॥
अस्याः पतिव्रताया यः सोऽस्याग्नौ लिङ्गयेत् स भवेत् ।
अस्यैव संशयोऽस्मिन् विषये कार्यः कदापि नैवेति ॥७३॥
भिक्षार्थं शुद्धान्तं गतं सबालं निरीक्ष्य मां राज्ञी ।
आहास्य मया दृष्टः स्वामी भगवन्! भवेत् स किं मन्त्रः॥७४॥
इत्यस्यैवेति ब्रुवते मयि निशामयन्तं राज्ञी ।
प्रणमय्य मावोचत् स्वपादेवं चेद्रतीव धन्येयम् ॥७५॥
स्वप्नोऽसत्यः स्यात् चेत् बालकपालिनममुं निरोत्स्यामि ।
इति चाह सा तदाहं सस्मितमगदं तथास्तु याहमिति ॥७६॥
शिशुना सहासभैक्ष्यो निरयां स्थविरं तदानुयान्तं माँ ।
अमात्तं कान्तेऽसौ प्रचण्डवर्मा खलो गतायुरिति ॥७७॥
सोऽब्रवीत् हृष्टोऽसौ दुष्टो राज्यं भवेन्ममैवेति ।
अध्यास्ते राजसभामुपास्यमानः [1]कुशीलवैरभयः ॥७८॥
श्रुत्वा तत् वृद्धमपि तत्रोद्याने निधाय मठिकायाम् ।

---

(१) कुशीलवैः = गायकैः ।

जातुचिदङ्कुर्वि हृदये यथानयं राजधर्ममनुतिष्ठन् ॥९५॥
धुर्यो य आर्यकेतुर्वृद्धः सन्मन्त्रिलक्षणैश्च युतः ।
अवमत्य यदुपदेशानमित्रवर्मा दशामिमामापत् ॥९६॥
अपरं च कोशलोद्भव इति स शिशोरस्य मातृपक्षीयः ।
लब्धा स चेत् कथञ्चित् राज्यमिदं स्यात् चिरं सुगुप्तमिति॥९७॥
नानानयप्रयोगैः स्थविरद्वारा परीक्ष्य तं सम्यक् ।
तस्याशूहामनिशं साहाय्यं राज्यधूःसमुद्वहने ॥९८॥
विविधच्छद्मान् प्रणिधीन्नियोज्य नैजे वसन्तभानोश्च ।
राज्ये तेभ्योऽपायं वृत्तं समययुक्तं च तदुपायान् ॥९९॥

इति विश्रुतचरितं नाम अष्टम उच्छ्वासः ।

सन्वेयुः पौरसमितिगामन्त्रैः साकमेत्य देवकुलम् ।
भक्त्याभ्यर्च्य भवानीं बहिरिन्वानादयन् बहून् पटहान् ॥८८॥

तच्छब्दत्रस्तमनाः शर्वाण्या विग्रहं समुत्तोल्य ।
निक्षिप्यान्यत्रास्माद् विवरान्निरयां शिशुं च निरगमयम् ॥८९॥

संस्थाप्य यथापूर्वं मूर्तिमपावृत्य मन्दिरकपाटे ।
बहिरेत्याघोरवदं चकितं [1]मिषतो नमस्यतश्च जनान् ॥९०॥

मद्वदनेन मृडानी युष्मानादिशति यन्मया कृपया ।
पुत्रीकृतं शिशुमिमं मन्यध्वं विभमस्य शरणं च ॥९१॥

राज्या सुता प्रदेया भूसुरतनयाय शुल्कमिति गुप्तेः ।
अस्येच्छयात ऊर्ध्वं सर्वा राज्यस्थितिर्भवेत् चेति ॥९२॥

वच आकर्ण्यैतदहो भाग्यं भोजान्वयस्य यस्य त्वम् ।
देव्या दत्तः पालक इत्युक्त्वा मुदमयान् प्रजाः सर्वाः ॥९३॥

तस्मिन्नेव दिने नृपमहिला प्रादान्निजात्मजां मह्यम् ।
परिणाय्य मया विधिवत् ततोऽन्वरुध्यत जनैर्ममादेशः ॥९४॥

आर्यापुत्र इति ततः प्रसिद्धिरासीन्महीक्षितः सूनोः ।

---

(१) मिषतः = अवलोकयतः ।

आरुह्योऽश्वन्तमहं मखदः पृष्ठतस्तमन्वगमम् ।
यांस्त्वार्ता पैरिवल्तं देवीर्शाक्ति स्मरत्युपो ध्यरमत् ॥८॥
समराय मयाहूतः शम्भुर्मो भारतन् कृपाणेन ।
तत्रस्तोऽपि छित्वाहं भूमौ प्रक्षिप्य तन्नदानवदम् ॥९॥
ये सन्ति मद्गुप्तकामास्ते युद्धयेरन् मया सहेत्याह ।
नो येभमन्तु धरणौ नृपसूनोर्निर्विशन्तु च सुखानि ॥१०॥
मम तद्वचनं श्रुत्वा सर्वेऽपि स्वस्ववाहनात् तूर्णम् ।
स्ववतीर्य राजतनयं नत्वाऽऽदरतोऽभवंस्तदायत्ताः ॥११॥
मायोत्पादमन्तकपतिरयमिति तं नृपतिनन्दनं नीत्वा ।
अस्थापयं पितृपदेऽस्मापि तद्राज्ययोः सुरक्षां च ॥१२॥
मातुः समस्तमेनं राजानं ज्ञात्वचादिषं नृपते ! ।
यावन्नेष जनास्तिस्तावत् शक्नोमि नेह वस्तुमहम् ॥१३॥
तच्च स्वसाऽत्र तिष्ठतु कृतकार्यो यावदाशु विनिवर्ते ।
इति मद्वाक्यं श्रुत्वा सोऽवादीद् दुर्मनायमान इव ॥१४॥
अत्र भवान्यास्यति चेद् योऽभूदेवं ममाभ्युदयहेतुः ।
विस्तीर्णमिदं राज्यं शासितुमेकाक्यहं कथमलं स्याम्॥१५॥
उक्तं तदा मयैतद्विषयेऽलं चिन्तया महीप ! यतः ।
सचिवोऽयमार्यकेतुः कर्मण्यस्मिन्नतीव निष्णातः ॥१६॥

## उत्तरपीठिका

एवमनेहसि[1] याति व्यतिक्रान्ते पञ्चानुवत्सरैः ।
मय्यनुरक्तोऽस्मि यथा मन्येनायं स्नुषाय गति कार्ये ॥ १ ॥
यद्यपि नयबलकोशैर्नाश्मन्तकपतिमर्त्योऽन्य वर्तेऽहम् ।
न्यूनो नास्मि ततोऽमुं स्थापयितुमलं शिशुं शिशू राज्ये ॥ २ ॥
सर्वत्र प्रथितमिदं यदकृत देवी शिशुं स्वपुत्रमिम् ।
मां चैनदत्तकमिति कपटं म इदं न कोऽपि जानाति ॥ ३ ॥
देवीशक्तेः पुरतः का वा शास्त्याः कथा मनुष्याणाम् ।
इति चिन्तयदश्मन्तकपतिसैन्यं विग्रहेऽस्त्युदासीनम् ॥ ४ ॥
राजसुतस्याभ्युदयाद् हृष्टास्तुष्टाश्च दानमानाद्यैः ।
राजसुलक्षणयुक्तं कांक्षन्ति जनास्तमेव नृपतिमिति ॥ ५ ॥
ये केचनान्तरङ्गा वसन्तभानोर्महोपतेर्लोकाः ।
ते सर्वे मत्प्रणिधिभिरुपजपिता भिन्नमानसाश्चासन् ॥ ६ ॥
अथ सोऽश्मन्तकराजः सन्नद्धानीक आहवायायात् ।
तं दृष्ट्वा नृपसूनुर्भास्करवर्मा पुरोऽगमद् धृत्या ॥ ७ ॥

---

( १ ) अनेहसि = काले ।

शिविरे न वीक्ष्य दुःखं परमं याताः कुमारकाः सर्वे॥२५॥
तेन सममेव पितरौ द्रक्ष्यामो नान्यथेति निर्धार्य ।
विनिवर्त्य सैन्यमखिलं सर्वे सम्प्रस्थितास्तमन्वेष्टुम् ॥२६॥
दुर्गमदरीं महाद्रिं भ्रान्त्वैमां यो जनन्यहं चापि ।
सर्वं निवेद्य मुनये मार्गास्त्यक्तुं तदाश्रममुपेत्य ॥२७॥
चरणनतौ प्रेक्ष्यावां त्रिकालविद्वामदेवमुनिरवदत् ।
द्रष्टास्थो निजतनयान् षोडशवर्षैर्न साहसं कार्यम् ॥२८॥
कालं नीत्वाद्यावधि तद्विश्वासादधारयावासून् ।
अवधावासन्नान्ते गत्वा मुनये न्यवेदयाव पुनः ॥२९॥
भगवन् ! समाप्तकल्पोऽवधिस्त्वयोक्तो [1]प्रवृत्तिरद्यापि ।
पुत्राणां नाज्ञायत नावादिश तदद्य करणीयम् ॥३०॥
ऋषिरस्मिन्नवदन्नृप सर्वकुमाराः सुदुर्जयान् शत्रून् ।
जित्वाप्तकीर्तिराज्याश्चम्पाख्यामासते पुरीमधुना ॥३१॥
इति मुनिवचनात् प्रैष्यत एतल्लिखितं द्रुतं समेत यदि ।
क्षणमपि विलम्ब्यते चेत् जीवन्तौ न हि विलोकयेतावाम्
अथ पुष्पपुरीगमने निश्चितमनयः कुमारकाः सर्वे ।
प्रथमं गत्वोज्जयिनीं तत्र व्यजयन्त मानसारनृपम् ॥३३॥

(१) प्रवृत्तिः = वृत्तान्तः ।

तत्साद्विधाय निखिलां व्यवस्थितिमहं प्रयामि राज्यस्य ।
इति बहु निवेदितोऽपि स समातृको मां व्यवारयद् गमनात्‌॥१७॥
वत्कलराज्यमदान्मे तद्दूरीकृत्यानुनीय तौ यावत् ।
प्रस्थातुकाम आसं चाहूये चाङ्गभुजा तूर्णम् ॥१८॥
अत्रैत्य पूर्वपुण्यप्रकर्षतो वः समीक्ष्य जातोऽहम् ।
कृतकृत्य इतीदं मे वृत्तं राजाधिराजसुत ! कृत्स्नम् ॥१९॥
आनाय्य सोमदत्तं पाटलिपुत्रात् सजानिमवशिष्टाः ।
तत्राऽमिलिन् कुमारा विनैव पुष्पोद्भवात् प्रियवयस्यात्‌॥२०॥
अत्रान्तरे कतिपये भृत्या भूपस्य राजहंसस्य ।
आदाय पत्रमायुस्तदृष्ट्वाद् राजवाहनः [1]प्रह्वः ॥२१॥
नत्वा भूयोभूयः शिरसि निधाय स्वयं हि तल्लिखितम् ।
प्रावर्तत वाचयितुं निजसुहृदां राजनन्दनः पुरतः ॥२२॥
स्वस्ति पुरात्पत्राग्र्यात् पुष्पानाशास्य राजहंसोऽयम् ।
आदिशति पुरीं चम्पामधिवसतो राजवाहनप्रमुखान् ॥२३॥
यद्गिरीं गत्वा यूयं विन्ध्याटव्यां शिवालयस्यारात् ।
कम्पचित्कृत्त सेनानिवेशनं निशि प शूलिनोऽप्यधितिष्ठ ।
कर्तुं शङ्करनिलये स्थितवन्तं राजवाहनं मातः ।

(१) प्रह्वः = नम्रः ।

मोऽत्यन्त विद्यते षप उचितं नैनं निवारयेयुरिति ॥४१॥
अस्मान्महर्षिवचनाद् सर्वे त्यक्त्वा इदं निजान देशान ।
गत्वाऽन्तः स्वजनान् विमोक्षाशाः सदान्वरुध्यन्त ॥४२॥

इति पूर्वदशकुमारचरिते पूर्वपीठिका समाप्ता ।

आर्त्तौ निहते तस्मिन्नाराध्यामि सुन्दरीं तदपि ।
राज्यमुरीकृत्यास्य त्वदनु रतां निर्गोऽग मन्त्रितान्॥३४॥
पुत्रोऽद्भवं कुमारं सदारमुन्मोच्य चारकान्सर्वे ।
पुत्रा नेमुश्चरणौ पित्रोस्तावपि परां मुदमयाताम् ॥३५॥
तेषां कुमारकाणामभिलाषं राजवाहनादीनाम् ।
विज्ञायर्षी राज्ञो राज्यस्य पुरो जगाद सान्त्वतान् ॥३६॥
वत्सा गत्वा स्वान् देशान् न्यायेन पौरजानपदान् ।
परिपाल्य पुनः पितरौ प्रणन्तुमायात वो यदेच्छा स्यात् ।
इत्यादिष्टाः सर्वे राज्ञीं नृपतिं मुनिं च नत्वाऽयान् ।
दिग्विजयं च विधाय प्रत्यायासिषुरनेहसाऽल्पेन ॥३८॥
आकर्ण्य कुमाराणां सर्वेषां दुर्घटानि चरितानि ।
परमानन्दं प्राप्तस्तपोनिधिं तं व्यजिज्ञपद्राजा ॥३९॥
भगवंस्तव प्रसादान्मनोरथाधिकसुखं मयाधिगतम् ।
इच्छाम्यायुःशेषं वानप्रस्थ्येन नेतुमधुनेह ॥४०॥
तन्निश्चयान्नरपतिं [1]प्रतीपयन्तः कुमारका मुनिना ।

---

(१) प्रतीपयन्तो निवारयन्तः ।

बाणाङ्गनवभूवर्षे दर्शे माधवमासगे ।
टिप्पणीपूर्त्तिमासेयं प्रीयतां तेन शङ्करः ॥

महाकवेः श्रीदण्डिनः कृतिर्दशकुमारचरितं हि विश्वविश्रुतं वर्तते। संस्कृतसाहित्ये प्रविविक्षवः केवलसंस्कृताध्यायिन आङ्गलभाषाशालासु द्वितीयभाषात्वेन संस्कृताध्यायिनो वा विद्यार्थिनो दशकुमारचरितस्य प्रौढग्रन्थनिबद्धत्वेन कष्टोढं न समन्त इति विद्यार्थिजनसौकर्याय ग्वालियरपुरालङ्कारैर्गिन्दूरैः प्रवयोभिः श्रीसोमनाथशास्त्रिपादैर्दशकुमारचरितं नाम नवीनं प्रसादादिगुणसम्पन्नं सरलं प्रणीतं प्रबन्धं समालोक्य भृशं प्रमुदिता वयं प्रबन्धस्यास्य परमोपादेयतां प्रतीमः। विशेषतः आङ्गलशालासु संस्कृतभाषाध्येतॄणां छात्राणां यद्ययं प्रबन्धः पाठ्यत्वेन परिकल्प्येत, तर्हि तेषां महानुपकारः स्यादिति वयं निःसंदिग्धं संमन्यामहे।

जीयात्सोम इव श्रीमान् सोमनाथकविश्चिरम्।
जीयात्तत्कृतिरप्येषा यावत्सोमार्कदर्शनम्॥१॥

नरसिंहाचार्यः वरखेडः,
पण्डितशिरोमणिः
प्रोफेसर ग० सं० कॉलेज काशी।

नारायणशास्त्री खिस्ते
(साहित्याचार्यः, साहित्यवारिधिः),
काशिकराजकीयसंस्कृतमहाविद्यालयसरस्वतीभवनलिखित-
पुस्तकविभागाध्यक्षः।

गङ्गाधरशास्त्री भारद्वाजः,
साहित्य-व्याकरणाचार्यः,
प्रोफेसर गवर्नमेंट संस्कृत कॉलेज, काशी।

आजौ निहते तस्मिन्नादायावन्तिसुन्दरीं तदपि ।
राज्यमुरीकृत्यास्य व्यदधू रक्षां नियोज्य सत्सचिवान्॥३४॥
पुष्पोद्भवं कुमारं सदारमुन्मोच्य चारकात्सर्वे ।
पुत्रा नेमुश्चरणौ पित्रोस्तावपि परां मुदमयाताम् ॥३५॥
तेषां कुमारकाणामभिलाषं राजवाहनादीनाम् ।
विज्ञायर्षी राज्ञो राज्याश्च पुरो जगाद् ज्ञात्वेतान् ॥३६॥
वत्सा गत्वा स्वान् देशान् न्यायेन पौरजानपदान् ।
परिपाल्य पुनः पितरौ मरणान्तुमायात वो यदेच्छा स्यात् ।
इत्यादिष्टाः सर्वे राज्ञीं नृपतिं मुनिं च नत्वाऽस्यान् ।
दिग्विजयं च विधाय प्रत्यायासिपुरनेहसाऽल्पेन ॥३८॥
आकर्ण्य कुमाराणां सर्वेषां दुर्घटानि चरितानि ।
परमानन्दं प्राप्तस्तपोनिधिं तं व्यजिज्ञपद्राजा ॥३९॥
भगवंस्तव प्रसादान्मनोरथाधिकसुखं मयाधिगतम् ।
इच्छाम्यायुःशेषं वानप्रस्थ्येन नेतुमधुनेह ॥४०॥
तन्निश्चयात्परपतिं [1]प्रतीपयन्तः कुमारका मुनिना ।

---

(१) प्रतीपयन्तो निवारयन्तः ।

वाताहूतरजोभूतर्पे दृशौ गायत्रमालगे ।
दिग्पालीयुवतिमालये प्रीयतां देव शङ्करः ॥

